तत्तो अ सुमंगल सणंकुमार सुच्छित्त एइ माहिंदो । वालुय वाइल वणिए अमंगलं अप्पणो असिणा ॥ ५२१ ॥

ततो भगवान् सुमङ्गलं नाम ग्रामं गतः, तत्र सनत्कुमारो देवेन्द्रः प्रियपृच्छक आगतः, ततः सुक्षेत्रायां भगवान् जगाम, तत्र माहेन्द्रः प्रियपृच्छक आगमत्, तदनन्तरं पालकं नाम ग्रामं स्वामी गतः, तत्र वाइलो नाम वणिक् देशान्तरं गच्छन् अमङ्गलमितिकृत्वा भगवत उपरि खड्गमुद्गीर्य प्रधावितः, तत आत्मना स्वहस्तेन असिना विनाशितः ॥

ततो सामी चंपं नयरिं गतो, तत्थ सोमदत्तमाहणस्स अग्गिहोत्तसालाए वसहिं उवगतो, तत्थ चाउम्मासं खमइ, तत्थ दुवे जक्खा पुन्नभद्दमाणिभद्दा रत्तिं पज्जुवासंति, चत्तारि मासे रत्तिं रत्तिं पूयं करेंति, ताहे सो चिंतेइ–किंपि जाणइ एस तो देवा महेंति, ताहे विन्नासणनिमित्तं पुच्छइ–को ह्यात्मा?, भगवानाह–योऽहमित्यभिमन्यते, स कीदृशः?, सूक्ष्मोऽसौ, किं तत् सूक्ष्मं?, यदिन्द्रियैर्ग्रहीतुं न शक्यते इति, तथा किं तं ते पदेसणयं? किं पच्चक्खाणं?, भगवानाह–साइदत्ता! दुविहं पदेसणगं–धम्मियं अधम्मियं वा, पदेसणगं नाम उपदेशः, पच्चक्खाणे दुविहे–मूलपच्चखाणे उत्तरपच्चक्खाणे य, एएहिं पएहिं तस्स उवगयं । अमुमेवार्थमाह—

चंपा वासावासं जक्खिंदो साइदत्त पुच्छा य । वागरण दुह पएसण पचक्खाणे अ दुविहे अ ॥ ५२२ ॥

भगवान् चम्पायां वर्षावासं कृतवान्, तत्र द्वौ यक्षेन्द्रौ भगवतो महिमां कृतवन्तौ, ततः स्वातिदत्तस्य ब्राह्मणस्य पृच्छा, भगवतो व्याकरणं, द्विविधं प्रदेशनं द्विविधं च प्रत्याख्यानमिति ॥ ततो भगवं [illegible]

गतो, तत्थ सक्को आगतो वंदित्ता पूइत्ता नट्टविहिं उवदंसित्ता वागरेइ–जहा एत्तिएहिं दिवसेहिं केवलनाणमुप्पज्जिहिइ, ततो सामी मिंढियगामं गतो, तत्थ चमरो वंदतो पियपुच्छओ य एइ, वंदित्ता पुच्छित्ता य पडिगतो। अमुमेवार्थमाह–

जंभियगामे नाणस्स उप्पया वागरेइ देविंदो। मिंढियगामे चमरो वंदण पियपुच्छणं कुणइ ॥ ५२३ ॥

जृम्भिकग्रामे देवेन्द्रः–शक्रो ज्ञानस्योत्पादं व्यागृणाति, तथा मिण्ढिकग्रामे चमरो वंदनं प्रियपृच्छनं करोति ॥

ततो भयवं छम्माणिं नाम गामं गतो, तस्स बाहिं पडिमं ठितो, तत्थ सामिसमीवे गोवो गोणे छड्डेऊण गामं पविट्ठो, दोहणाणि काऊण निग्गतो, ते य गोणा अडविं पविट्ठा चरियव्वगस्स निमित्तं, ताहे सो आगतो पुच्छइ–देवज्जग! कहिं ते बइल्ला ?, भयवं मोणेण अच्छइ, ताहे सो परिकुवितो भयवतो कण्णेसु कडसलागातो छुभइ, एगा इमेण कन्नेण एगा इमेण कन्नेण जाव दोन्निवि मिलिया, ताहे मूले भग्गाओ, मा कोइ उक्खणिहिइ, केइ भणंति–एक्का चेव जाव इयरेण कण्णेण निग्गया तओ भग्गा। कण्णेसु तऊ तत्तं गोवस्स कयं तिविट्ठुणा रन्ना। कन्नेसु वद्धमाणस्स तेण छूढा कडसलागा ॥ १ ॥ भयवतो तद्दारवेयणिज्जं कम्मं उइन्नं, ततो सामी मज्झिमं पावं गतो, तत्थ सिद्धत्थो नाम वाणियतो, तस्स घरमागतो, तस्स य मित्तो खरतो नाम वेज्जो, ते दोऽवि सिद्धत्थघरे अच्छंति, सामी भिक्खस्स पविट्ठो, वाणियतो वंदइ थुणइ य, वेज्जो तित्थयरं पासिऊण भणइ–अहो भयवं सवलक्खणसंपुन्नो किंतु ससल्लो, ततो सो वाणियतो संभंतो भणइ, पलोएहि कहिं सल्लो ?, तेण पलोयंतेण दिट्ठो कण्णेसु, तेण वाणिएण भन्नइ–नीणेहि एयं महातवस्सिस्स, पुन्नं होहिइ तववि मज्झवि, भणइ–निप्पडिकम्मो भयवं न इच्छइ, ताहे पडियरावितो जाव दिट्ठो उज्जाणे ताव पडिमं

ठितो, ते ओसहाणि गहाय गता, तत्थ भयवं तेल्लदोणीए निवण्णावितो मक्खितो य, पच्छा बहुएहिं पुरिसेहिं जंतितो अफंतो य, पच्छा संडासएण गहाय कड्ढियातो, तत्थ सरुहिरातो सलागातो अंछियातो, तासु य अच्छिज्जंतीसु भगवया आरसियं, ते य मणूसे उप्पाडित्ता उट्ठितो, महाभेरवं तत्थ उज्जाणं जायं, देउलं च, पच्छा संरोहणी ओसही दिण्णा, ततो ताहे चेव भयवं पउणो जातो, ततो वंदित्ता खामित्ता य गता। एतदेवाह—

छम्माणि गोवकडसल पवेसणं मज्झिमाइ पावाए। खरओ विज्जो सिद्धत्थ वाणिओ नीहरावेइ ॥ ५२४ ॥

भगवान् छम्माणियानाम ग्रामं गतः, तत्र गोपेन भगवतः कर्णयोः कटशलाकाप्रवेशनं कृतं, ततो भगवान् मध्यमपापायां गतः, तत्र खरको वैद्यस्तत्पार्श्वात् सिद्धार्थनामा वणिक् ते कटशलाके निर्हारयति।

इह सवेसु किर उवसग्गेसु कयरे दुविसहा ?, उच्यते—कडपूयणासीयं कालचक्कं एयं च सल्लं निकड्ढिज्जंतं, अहवा जहन्नगाण उवरिं कडपूयणासीयं, मज्झिमाण कालचक्कं, उक्कोसगाणमुवरिं सल्लुद्धरणं। गोवेण आरद्धा उवसग्गा गोवेण णिट्ठिया। एसो गोवो सत्तमिं गतो, खरतो सिद्धत्थो य एए दोऽवि तिव्वमवि वेयणमुदीरंता विसुद्धता देवलोगं गता। ततो सामी जंभियगामं गतो, तस्स बहिया वेयावत्तस्स चेइयस्स अदूरसामंते उज्जुवालियाए नदीए तीरे उत्तरिल्ले कूले सामागस्स गाहावइस्स कट्ठकरणे, कट्ठकरणं नाम छेत्तं, सालपायवस्स अहे उक्कुडुयनिसज्जाए गोदोहियाए आयावणाए आयावेमाणस्स छट्ठेण भत्तेणं अपाणएणं बारसहिं संवच्छरेहिं वइक्कंतेहिं तेरसमस्स संवच्छरस्स अंतरा वट्टमाणस्स वइसाहसुद्धदसमीए पाईणगामिणीए छायाए पमाणपत्ताए पोरिसीए सुवएणं दिवसेणं विजएणं मुहुत्तेणं हत्थुत्तरानक्खत्तेणं

झाणंतरियाए वट्टमाणस्स एगंतवियक्कं वोलीणस्स सुहुमकिरियं झाणमप्पत्तस्स अणुत्तरकेवलं नाणदंसणं समुप्पन्नं । एतदेव संक्षेपत आह—

जंभिय बहि उजुवालिय तीरवियावत्त सामसालअहे । छट्टेणुक्कुडुयस्स उ उप्पन्नं केवलं नाणं ॥ ५२५ ॥

जृम्भकग्रामस्य बहिः, 'वियावत्त'त्ति वियावृत्तं नाम अव्यक्तं, पतितशटितमप्रकटमिति भावः, तस्य चैत्यस्यादूरे ऋजुपालिकानदीतीरे श्यामाकस्य गृहपतेः क्षेत्रे शालवृक्षस्याध उत्कुटुकस्य भगवतः षष्ठेन केवलज्ञानमुत्पन्नं ॥ तत्र तपसा केवलज्ञानं समुत्पन्नमिति यद्भगवता तपः सेवितं तदभिधित्सुराह—

जो अ तवो अणुचिन्नो वीरवरेणं महाणुभावेणं । छउमत्थकालियाए अहक्कमं कित्तइस्सामि ॥ ५२६ ॥

यच्च तप आचरितं वीरवरेण महानुभावेन छद्मस्थकाले, यत्तदोर्नित्याभिसम्बन्धात् तद् यथाक्रमं—येन क्रमेणानुचरितं भगवता तथा कीर्तयिष्यामि ॥ तच्चेदम्—

नव किर चाउम्मासे छ किर दोमासिए उवासीअ । बारस य मासियाइं बावत्तरि अद्धमासाइं ॥ ५२७ ॥

नव किल चातुर्मासिकानि, षट् किल द्विमासिकानि उपोषितवान्, किलशब्दः परोक्षासागमवादसंसूचकः, द्वादश मासिकानि द्विसप्ततिमर्द्धमासिकानि उपोषितवानिति क्रियायोगः ॥

एगं किर छम्मासं दो किर तेमासिए उवासीय । अड्ढाइज्जा य दुवे दो चेव दिवड्ढमासाइं ॥ ५२८ ॥

एकं किल षण्मासं द्वे किल त्रैमासिके उपोषितवान्, तथा अर्द्धतृतीयमासनिष्पन्नं तपोऽर्द्धतृतीयं ते अर्धतृतीये द्वे, चशब्दः

क्रियानुकर्षणार्थः, द्वे एव च व्यर्द्धमासे, द्वितीयमर्द्धं ययोस्तौ व्यर्द्धौ २ मासौ यस्य तद् व्यर्द्धमासं ते व्यर्द्धमासे तपसी कृतवान्,

भद्दं च महाभद्दं पडिमं तत्तो अ सव्वओभद्दं । दो चत्तारि दसेव य दिवसे ठासीयमणुवद्धं ॥ ५२९ ॥

भद्रां महाभद्रां सर्वतोभद्रां च प्रतिमां यथाक्रमं द्वौ चतुरो दश च दिवसान् अनुबद्धं–सन्ततमपान्तराले पारणकमकृत्वेति भावः स्थितवान् ।

गोअरमभिग्गहजुअं खमणं छम्मासिअं च कासी अ । पंचदिवसेहिँ ऊणं अव्वहिओ वच्छनयरीए ॥ ५३० ॥

गोचरे अभिग्रहः गोचराभिग्रहस्तेन युतं गोचराभिग्रहयुतं क्षपणकं पाण्मासिकं पञ्चभिर्दिवसैरूनमव्यथितः–अपीडितो वत्सनगर्यां–कोशाम्ब्यामकार्षीत् ॥

दस दो अ किर महप्पा ठाइ मुणी एगराइयं पडिमं । अट्ठमभत्तेण जई इक्किकं चरमराई अ ॥ ५३१ ॥

दश द्वे च सर्वसङ्ख्यया द्वादश किल एकरात्रिकी प्रतिमा, सूत्रे चैकवचनं प्राकृतत्वात्, महात्मा–मुनिः 'ठाति'त्ति स्थितवान्, कथं स्थितवानित्याह–एकैकां च प्रतिमां अष्टमभक्तेन–त्रिरात्रोपवासेन चरमरात्रिकीं–चरमरजनीनिष्पन्नां प्रति'यति'त्ति अयतिष्ट प्रयत्नवान् ॥

दो चेव य छट्ठसए अउणातीसे उवासिओ भयवं । न कयाइ निच्चभत्तं चउत्थभत्तं च से आसि ॥ ५३२ ॥

द्वे एव षष्ठशते एकोनत्रिंशे एकोनत्रिंशदधिके भगवान् उपोषितवान्, एवं च न कदाचिन्नित्यभक्तं चतुर्थभक्तं च 'से' तस्यासीत् ॥

बारस वासे अहिए छट्ठं भत्तं जहन्नगं आसि । सव्वं च तवोकम्मं अपाणयं आसि वीरस्स ॥ ५३३ ॥

द्वादश वर्षाण्यधिकानि भगवतश्छद्मस्थस्य सतः षष्ठं भक्तं-व्यहोरात्रोपवासरूपं तपो जघन्यकमासीत्, सर्वं च तपःकर्म अपानकमासीत् वीरस्य, न तपःकर्म कुर्वन् पानीयमभ्यवहृतवान् भगवानिति भावः ॥ पारणककालमान-मभिधातुकाम आह—

तिन्नि सए दिवसाणं अउणापन्ने य पारणाकालो । उक्कुडुअनिसिज्जाए ठियपडिमाणं सए बहुए ॥ ५३४ ॥

त्रीणि शतानि एकोनपञ्चाशानि-एकोनपञ्चाशदधिकानि दिवसानां पारणककालो भगवतः, तथा उत्कुटुकनिषद्यायां स्थितप्रतिमानां बहूनि शतानि ॥

पव्वज्जाए दिवसं पढमं एत्थं तु पक्खिवित्ताणं । संकलियम्मि उ संते जं लद्धं तं निसामेह ॥ ५३५ ॥

प्रव्रज्यायाः सम्बन्धिनं दिवसं प्रथमं अत्र—उक्तलक्षणदिवसगणने प्रक्षिप्य सङ्कलिते सति यल्लब्धं तन्निशामयत-शृणुतेत्यर्थः ॥

बारस चेव य वासा मासा छच्चेव अद्धमासो अ । वीरवरस्स भगवओ एसो छउमत्थपरियाओ ॥ ५३६ ॥

वीरवरस्य भगवत एषः-एतावत्प्रमाणः छद्मस्थपर्यायस्तद्यथा-द्वादश वर्षाणि षण्मासा अर्द्धमासश्च ॥

एवं तवोगुणरओ, अणुपुव्वेणं मुणी विहरमाणो । घोरं परिसहचमूं अहिआसित्ता महावीरो ॥ ५३७ ॥

एवम्-उक्तेन प्रकारेण तपोगुणेषु रतस्तपोगुणरतः आनुपूर्व्येण-क्रमेण मुनिर्विहरन् घोरां-रौद्रां परीषहचमूं-परिषहसेनामधिसह्य महार्थः ॥

उप्पन्नंमि अणंते नट्ठम्मि अ छाउमत्थिए नाणे। राईए संपत्तो महसेणवणम्मि उज्जाणे ॥ ५३८ ॥

उत्पन्ने-प्रादुर्भूते अनन्ते-अनन्तज्ञेयविषये, कस्मिन्?-ज्ञाने-केवलज्ञाने, नष्टे च छाद्मस्थिके मत्यादिरूपे ज्ञाने, देशज्ञानव्यवच्छेदेन केवलज्ञानसद्भावात्, भावितं चैतत् प्रथमपीठिकायां, रात्रौ सम्प्राप्तो महसेनवने उद्याने, किमिति चेत्? उच्यते,भगवतो ज्ञानरत्नोत्पत्तिसमनन्तरमेव देवाश्चतुर्विधा अभ्यागता आसन्, अत्यद्भुतां च प्रहर्षयन्तो ज्ञानोत्पादमहिमां चक्रुः, तत्र भगवान् अवबुध्यते-नात्र कश्चित्प्रव्रज्याप्रतिपत्ता विद्यते, तत एतद्विज्ञाय न विशिष्टधर्म्मकथनाय प्रवृत्तवान्, केवलं कल्प एषः-यत्र ज्ञानमुत्पद्यते तत्र जघन्यतोऽपि मुहूर्त्तमात्रमवस्थातव्यं देवकृता च पूजा प्रतीच्छनीया धर्म्मदेशना च कर्त्तव्येति सङ्क्षेपतो धर्म्मदेशनां कृत्वा द्वादशसु योजनेषु मध्यमा नाम नगरी, तत्र सोमिलाख्यो नाम ब्राह्मणः, स यज्ञं यष्टुमभ्युद्यतः, तत्र चैकादशोपाध्यायाः समागताः, ते च चरमशरीरा भवान्तरोपार्जितगणधरलब्धयश्च, तान् विज्ञायासङ्ख्येयाभिर्देवकोटीभिः परिवृतो देवोद्योतेन दिवस इवाशेषं पन्थानमुद्योतयन् देवपरिकल्पितेषु सहस्रपत्रेषु नवनीतस्पर्शेषु पद्मेषु चरणन्यासं विदधानो मध्यमनगर्यां महसेनवनोद्यानं सम्प्राप्तः ॥

अमरनररायमहिओ पत्तो वरधम्मचक्कवट्टित्तं। बीअंपि समोसरणं पावाए मज्झिमाए उ ॥ ५३९ ॥

अमरा—देवाः नरा-मनुष्याः तेषां राजानस्तैर्महितः-पूजितः प्राप्तो धर्म्मवरचक्रवर्त्तित्वं-धर्म्मवरप्रभुत्वं, द्वितीयं पुनः

समवसरणं, अपिशब्दः पुनरर्थे, पापायां मध्यमायां, प्राप्त इत्यनुवर्त्तते। ज्ञानोत्पत्तिस्थानकृतपूजापेक्षया चास्य द्वितीयता ॥

तत्थ किर सोमिलिओत्ति माहणो तस्स दिक्खकालम्मि । पउरा जणजाणवया समागया जन्नवाडम्मि ॥५४०॥

तत्र—पापायां मध्यमायां किलशब्दः पूर्ववत्, सोमिलः आर्य इति—ब्राह्मणः तस्य दीक्षाकाले—यागकाले पौरा—विशिष्टनगरनिवासिलोका जनाः—सामान्यलोका जानपदा—नानाजनपदभवा लोकाः समागता यज्ञपाटे ॥ अत्रान्तरे—

एगंते अ विवित्ते उत्तरपासम्मि जन्नवाडस्स । तो देवदाणविंदा करिंति महिमं जिणिंदस्स ॥ ५४१ ॥

एकान्ते विविक्ते यज्ञपाटस्योत्तरपार्श्वे ततो देवदानवेन्द्रा जिनेन्द्रस्य महिमां कुर्वन्ति, पाठान्तरं च—'कासी महिमं जिणिंदस्स' कृतवन्त इत्यर्थः । अमुमेवार्थं सविशेषं भाष्यकार आह—

भवणवइवाणमंतर जोइसवासी विमाणवासी य । सविड्ढीइ सपरिसा कासी नाणुप्पयामहिमं ॥ ५४२ ॥

भवनपतिव्यन्तरज्योतिर्वासिनो विमानवासिनश्च सपर्षदः सर्वर्द्ध्या ज्ञानोत्पत्तिमहिमासकार्षुः—कृतवन्तः ॥

इति श्रीमन्मलयगिर्याचार्यविहिताया आवश्यकवृत्तेः पूर्वभागः ॥

इति श्रीआगमोदयसमितिग्रन्थोद्धारे, ग्रन्थाङ्कः—५६.